# लघुकौमुदी



हें पुस्तक.

नारो आपाजी गोडबोले

यांनीं

तयार केलें तें

त्यांचे

ज्ञानप्रसारक छापखान्यांत छापिलें.

पुणें पेठ सदाशिव

किंमत ०१२ आणे.

॥ श्रीः ॥

# लघुकौमुदी

## व्याकरण

प्रारंभः



हें पुस्तक

**नारो आपाजी गोडबोले**

यांचे



रत्नप्रसारक छापखान्यांत छापिलें

पुणें पेठसदाशिव

सन १८८५

किंमत ।।। रु.

॥ श्रीगणेशायनमः ॥

# अथ लघुकौमुदी व्याकरणम् प्रारभ्यते.



नत्वासरस्वतींदेवींशुद्धांगुण्यांकरोम्यहम् पाणिनीयप्रवेशाय लघुसिद्धांत कौमुदीम् संज्ञा अ इ उ ण् ऋलृक् ए ओङ् ऐ औच् हयवरट् लण् ञमङणनम् झभञ् घढधष् जबगडदश् खफछठथचटतव् कपय् शषसर् हल् इति माहेश्वराणि सूत्राणि अणादिसंज्ञार्थानि एषामंत्या इतः हकारादिष्वकार उच्चारणार्थः लण्मध्ये त्वित्संज्ञकः हलंत्यम् १।३।३ उपदेशेऽन्त्यंहलित्स्यात् उपदेश आद्योच्चारणम् सूत्रेष्व दृष्टं पदं सूत्रांतरादनुवर्तनीयं सर्वत्र अदर्शनं लोपः १।१।६० प्रसक्तस्यादर्शनं लोपसंज्ञंस्यात् तस्य लोपः १।३।९ तस्येतो लोपः स्यात् णादयोऽणाद्यर्थाः आदिरन्त्येन सहेता १।१।७१ अन्त्येनेता सहित आदिर्मध्यगानां स्वस्यच संज्ञास्यात् यथाऽणिति अ इ उ वर्णानां संज्ञा एवमच् हल् अलित्यादयः ऊकालोऽज्झ्रस्वदीर्घप्लुतः १।२।२७ उश्च ऊश्च ऊ३श्च वः वाङ्कालइव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुत संज्ञः स्यात् स प्रत्येक मुदात्तादिभेदेन त्रिधा उच्चै रुदात्तः १।२।२९ नीचैरनुदात्तः १।२।३० समाहारः स्वरितः १।२।३१ स नवविधोऽपि प्रत्येक मनुनासिका ननुनासिकत्वाभ्यां द्विधा मुखनासिकावचनोऽनुनासिकः १।१।८ मुखसहित नासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् तदित्थम् अ इ उ ऋ, एषाम् वर्णानाम् प्रत्येकमष्टादशभेदाः लृवर्णस्य द्वादश तस्य दीर्घाभावात् एचामपि द्वादश तेषां ह्रस्वाभावात् तुल्यास्य प्रयत्नं सवर्णम् १।१।९ ताल्वादिस्थानमाभ्यन्तर प्रय-

न्तश्चेत्येतत् द्वयं यस्य येन तुल्यन्तन्मिथः सवर्ण संज्ञं स्या-
त् ऋऌवर्णयोर्मिथस्सावर्ण्यं वाच्यम् अकुहविसर्जनीया-
नां कण्ठः इचुयशानांतालु ऋटुरषाणाम् मूर्द्धा ऌतुलसानान्
दन्ताः उपूपध्मानीयानामोष्ठौ ञमङणनानां नासिका च ए
दैतोः कण्ठतालु ओदौतोः कण्ठोष्ठम् वकारस्य दन्तोष्ठ-
म् जिह्वामूलीयस्य जिह्वामूलम् नासिकाऽनुस्वारस्य यत्नो
द्विधा आभ्यन्तरो बाह्यश्च आद्यः पंचधा स्पृष्टेषत् स्पृष्टेषद्वि
वृतविवृतसंवृतभेदात् तत्रस्पृष्टम् प्रयतनं स्पर्शानाम् ईषत्स्पृ
ष्टमन्तस्थानाम् ईषद्विवृतमूष्मणाम् विवृतं स्वराणाम् ह्रस्व-
स्यावर्णस्य प्रयोगेसंवृतं प्रक्रियादशायान्तु विवृतमेव बाह्य-
स्त्वेकादशधा विवारस्संवारश्श्वासो नादो घोषोऽघोषोऽल्पप्रा
णो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति खरो विवाराश्श्वासा
घोषाश्च वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः
वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः कादयो मावसानाः स्प-
र्शाः यणोऽन्तस्थाः शल ऊष्माणः अचः स्वराः ᳵक ᳵख इति
कखाभ्याम् प्रागर्द्धविसर्गसदृशो जिह्वामूलीयः ᳶप ᳶफ इति
पफाभ्याम् प्रागर्द्धविसर्गसदृश उपध्मानीयः अं अः इत्यचः प-
रावनुस्वारविसर्गौ अणुदित्सवर्णस्य चाप्रत्ययः १।१।६९ अवि-
धीयमानोऽणुदिच्च सवर्णसंज्ञः स्यात् अत्रैवाण् परेणणकारेण
कुचुटुतुपु एतेउदितः तदेवमइत्यष्टादशानां संज्ञा तथेकारोका-
रौ ऋकारस्त्रिंशतः एवंऌकारोऽपि एचोद्वादशानाम् अनुनासि
कानुनासिकभेदेन यवला द्विधा तेनाऽननुनासिकास्ते द्वयोर्द्व
योस्संज्ञा परस्संनिकर्षस्संहिता १।४।१०९ वर्णानामतिशयित-
स्सन्निधिस्संहितासंज्ञः स्यात् हलोनन्तरास्संयोगः १।१।७-
अज्भिरव्यवहिताहलस्संयोगसंज्ञास्स्युः सुप्तिङन्तम् पदम् १।४।
१४ सुबन्तंतिङन्तञ्च पदसंज्ञंस्यात् इति संज्ञाप्रकरणम् इको-

यणचि ६।१।७७ इकस्स्थाने यण् स्यादचि संहितायां विषये सुधी-
उपास्य इति स्थिते तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६६ सप्तमीनि-
र्देशेन विधीयमानङ्कार्य्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम्
स्थानेऽन्तरतमः १।१।५० प्रसंगे सति सदृशतम आदेशस्स्यात् स
ध्य् उपास्य इति जाते अनचि च ८।४।४७ अचः परस्य यरो द्वे वा-
स्तो नत्वचि झलां जश् झशि ८।४।५३ स्पष्टम् इति धकारस्य दका-
रः संयोगान्तस्य लोपः ८।२।२३ संयोगान्तं यत्पदं तदन्तस्य लो-
पः स्यात् अलोऽन्त्यस्य १।१।५२ षष्ठीनिर्दिष्टोऽन्त्यस्यादेशः स्यात्
इति प्राप्ते यणः प्रतिषेधो वाच्यः सुद्ध्युपास्यः मध्वरिः धात्रंशः ला-
कृतिः एचोऽयवायावः ६।१।७८ एचः क्रमादय् अव् आय् आव्
एते स्युरचि यथासंख्यमनुदेशस्समानाम् १।३।१० समसम्बन्धी-
विधिर्यथासंख्यं स्यात् हरये विष्णवे नायकः पावकः वान्तो यि प्रत्य-
ये ६।१।७९ यकारादौ प्रत्यये परे ओदौतोर वा वौ स्तः गव्यम् नाव्य-
म् अध्वपरिमाणे च गव्यूतिः अदेङ्गुणः १।१।२ अत् एङ् च गुणसंज्ञ-
स्स्यात् तपरस्तत्कालस्य १।१।७० तः परो यस्मात्स च तात्परश्चो
च्चार्य्यमाणः समकालस्यैव संज्ञा स्यात् एकः पूर्वपरयोरित्यधि-
कृत्य आद्गुणः ६।१।८७ अवर्णादचि परे पूर्वपरयोरेको गुणादेश-
स्स्यात् उपेन्द्रः गङ्गोदकम् उपदेशेऽजनुनासिक इत् १।३।२ उपदेशेऽ
नुनासिकोऽजित्संज्ञस्स्यात् प्रतिज्ञानुनासिक्याः पाणिनीयाः
लण् सूत्रस्था वर्णेन सहोच्चार्य्यमाणो रेफो रलयोस्संज्ञा उरण्रप-
रः १।१।५१ ॥ ऋ इति त्रिंशतस्संज्ञेत्युक्तं तत्स्थाने योऽण् स रपरस्स-
न्नेव प्रवर्तते कृष्णर्द्धिः तवल्कारः लोपः शाकल्यस्य ८।३।१९ अ-
वर्णपूर्वयोः पदान्तयोर्य्यवयोर्वा लोपोऽशि परे पूर्वत्रासिद्धम् ८।
२।१ सपादसप्ताध्यायीम्प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वम्प्रति प-
रं शास्त्रमसिद्धम् हर इह हरयिह विष्ण इह विष्णविह वृद्धिरादै-
च् १।१।१ आदैच्च वृद्धिसंज्ञस्स्यात् वृद्धिरेचि ६।१।८८ आदेचि परे-

वृद्धिरेकादशःस्यात् गुणापवादः कृष्णैकत्वम् गङ्गौघः देवैश्वर्य्य-म् कृष्णौत्कण्ठ्यम् एत्येधत्यूठ्सु ६।१।८९ अवर्णादेजाद्योरेत्ये-धत्योरूठिचपरेवृद्धिरेकादेशस्स्यात् उपैति उपैधते प्रष्ठौहः ए-जाद्योः किम् उपेतः माभवान् प्रेदिधत् अक्षादूहिन्यामुपसंख्या-नम् अक्षौहिणीसेना प्रादूहोढोढ्येषैष्येषु प्रौहः प्रौढः प्रौढिः-प्रैषः प्रैष्यः ऋतेचतृतीयासमासे सुखेनऋतः सुखार्तः तृतीये-तिकिम् परमर्त्तः प्रवत्सतरकम् बलवसनार्णदशानामृणे प्रार्णम् वत्सतरार्णम् इत्यादि उपसर्गाः क्रियायोगे १।४।५९ प्रादयः क्रि-या योगे उपसर्गसंज्ञास्स्युः प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उ-प एतेप्रादयः भूवादयो धातवः १।३।१ क्रियावाचिनोभ्वादयो धातुसंज्ञाःस्युः उपसर्गादृतिधातौ ६।१।९१ अवर्णान्तादुपस-र्गादृकारादौधातौपरेवृद्धिरेकादेशस्स्यात् प्रार्छति एङिपररूपम् ६।१।९४ आदुपसर्गादेङादौधातौपररूपमेकादेशस्स्यात् प्रेजते उपोषति अचोऽन्त्यादिटि १।१।६४ अचाम्मध्येयोऽन्त्यःस आदिर्य्यस्य तट्टिसंज्ञंस्यात् शकन्ध्वादिषु पररूपम् वाच्यम् तच्चटेः शकन्धुः कर्कन्धुः मनीषा आकृतिगणोऽयम् मार्त्तण्डः ओमाङोश्च ६।१।९५ ओमि आङि चात्परेपररूपमेकादेशस्स्या-त् शिवायोन्नमः शिवेहि अकस्सवर्णेदीर्घः ६।१।१०१ अकस्स-वर्णेऽचिपरेपूर्वपरयोर्दीर्घएकादेशस्स्यात् दैत्यारिः श्रीशः वि-ष्णूदयः होतृकारः एङः पदान्तादति ६।१।१०९ पदान्तादेङो-तिपरे पूर्वरूपमेकादेशस्स्यात् हरेऽव विष्णोऽव सर्वत्रविभा-षागोः ६।१।१२२ लोकेवेदेचेङन्तस्यगोरतिवाप्रकृतिभावःप-दान्ते गो अग्रम् गोऽग्रम् एङन्तस्य किम् चित्र्वग्रम् पदान्ते किम् गोः अनेकाल्शित्सर्वस्य १।१।५५ इति प्राप्ते ङिच्च १।१।५३

ङि: दनेकालष्यन्त्यस्य वस्यात् अवङ् स्फोटायनस्य ६।१।१२३
पदान्ते एङन्तस्य गोरवङ् वाऽचि गोग्रम् गवाग्रम् पदान्ते कि
म् गवि इन्द्रे च ६।१।१२४ गोरवङ् स्यादिन्द्रे गवेन्द्रः दूराद्धूते च ८
।२।८४ दूरात् सम्बोधने वाक्यस्य टेः प्लुतो वा प्लुत प्रगृह्या अचि
नित्यम् ६।१।१२५ एते चि नित्यम् प्रकृत्याः स्युः आगच्छ कृष्ण
३ अत्र गौश्चरति ईदूदेद्द्विवचनम् प्रगृह्यम् १।१।११ ईदूदेदन्तं द्वि
वचनम् प्रगृह्यम् स्यात् हरी एतौ विष्णू इमौ गङ्गे अमू अदसो
मात् १।१।१२ अस्मात्परावीदूतौ प्रगृह्यौस्तः अमी ईशाः राम
कृष्णावमू आसाते मात्किम् अमुकेऽत्र चादयोऽसत्वे १।४।५७
अद्रव्यार्थाश्चादयोनिपाताः स्युः प्रादयः १।४।५८ एतेऽपि तथा
निपात एकाजनाङ् १।१।१४ एकोज् निपात आङ् वर्ज्यः प्रगृह्यः इ
इन्द्रः उउमेशः वाक्य स्मरणयोरङित् आ एवन्नु मन्यसे आ एव
ङित् अन्यत्र ङित् ईषदुष्णम् ओष्णम् ओत् १।१।१५ ओद
न्तो निपातः प्रगृह्यः अहो ईशाः सम्बुद्धौ शाकल्यस्येतावनार्षे
१।१।१६ सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ प
विष्णो इति विष्णाइति विष्णविति मय उञो वो वा ८।३।३३ मय
परस्य उञो वो वा अचि किम्वुक्तम् किमुउक्तम् इको ऽसवर्णे शाकल
स्य ह्रस्वश्च ६।१।१२७ पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि ह्रस
विधिसामर्थ्यान्नस्वरसंधिः चक्रि अत्र चक्र्यत्र पदान्ता इति कि
म् अचो रहाभ्यान्द्वे ८।४।४६ अचः पराभ्यां रेफहकाराभ्या
म्परस्य यरो द्वे वास्तः गौर्य्यौ न समासे वाप्यश्वः ऋत्यकः ६।१।१
ऋति परे पदान्ता अकः प्राग्वत् ब्रह्मऋषिः ब्रह्मर्षिः पदान्त
किम् आर्छत् इति स्वरसन्धिः स्तोः श्चुना श्चुः ८।४।४० सकारत
वर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः रामश्शेते रा
मश्चिनोति सच्चित् शार्ङ्गिञ्जय शात् ८।४।४४ शात्परस्य त
न विश्नः प्रश्नः ष्टुना ष्टुः ८।४।४१ स्तोः ष्टुना योगे ष्टुः रामष्षष्ठ

रामषीकते पेष्टा तष्टीका चक्रिण्ढौकसे नपदान् तादोरनाम्८।४।४२पदान्तादृवर्गान्परस्या ऽनामः स्तोष्टुर्नस्यान् षट् सन्तः षट् तेपदान् नाम्किम् ईट्टेदोः किम् सर्पिष्टमम् अनाम्नवतिन-गरीणामिति वाच्यम् षण्णाम् षण्णवतिः षण्णगर्य्यः तोः षि ८।४।४३नष्टत्वम् सन्षष्ठः झलाञ्जशोन्ते ८।२।२९पदान्-तेझलाञ्जशः स्युः वागीशः यरोऽनुनासिकेऽनुनासिकोवा-८।४।४५यरः पदान् तस्यानुनासिकेपरेऽनुनासिकोवास्यात् एतन्मुरारिः एतद्मुरारिः प्रत्यये भाषायान्नित्यम् तन्मात्रम्-चिन्मयम् तोर्लि ८।४।६० परसवर्णः तल्लुयः विद्वाँल्लिखनि न-स्यानुनासिकोलः उदः स्थास्तम्भोः पूर्वस्य ८।४।६१ उदः पर-योः स्थास्तम्भोः पूर्वसवर्णः तस्मादित्युत्तरस्य १।१।६७ प ञ्चमीनिर्देशेन क्रियमाणङ्कार्य्यम्वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् आदेः परस्य १।१।५४ परस्य यद्विहितन्तत्तस्या देर्बोध्यम् इतिसस्यथः झरोझरिसवर्णे ८।४।६५ हलः पर-स्य झरोवालोपस्सवर्णे झरि खरिच ८।४।५५ खरि झलाञ्च-रः स्युः इत्युदोदस्यतः उत्थानम् उत्तम्भनम् झयोहोऽन्यतर-स्याम् ८।४।६२ झयः परस्य हस्य वा पूर्वसवर्णः नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः वाग् घरिः वाग्हरिः शश्छोटि ८।४।६३ झयः परस्य शस्य छोवाऽटि तद्शिव इत्यत्र-दस्यचुत्वेन जकारे कृते खरिचेति जकारस्य चकारः तच्छिवः तच्शिवः छत्वममीतिवाच्यम् तच्छ्लोकेन मोऽनुस्वारः ८।३।२३ मान्तस्य पदस्यानुस्वारो हलि हरिं वन्दे नश्चापदान्तस्य झलि ८।३।२४ नस्यमस्य चापदान्तस्य झल्यनुस्वारः यशांसि आक्रंस्यते अनुस्वारस्य ययिपरसवर्णः ८।४।५८ शान्-तः वा पदान्तस्य ८।४।५९ त्वङ्करोषि त्वंकरोषि मोराजि स-मः क्वौ ८।३।२५ क्विबन्ते राजतौ परे समोमस्य म एवस्या-

न् सम्राट् हेमपरेवा ८।३।२६ मपरे हकारे परेमस्यमोवाकि
म् ह्मलयति किंह्मलयतिययवलपरे यवलावा कियँ ह्यः किं-
ह्यः किव् ह्वलयति किल् ह्लादयति नपरेनः ८।३।२७ नप-
रे हकारेमस्यनोवा किन् ह्नुते किंह्नुते ङः सि धुट् ८।३।२९-
ङात्परस्यसस्य धुड्वा आद्यन् तौ टकितौ १।१।४६ टित्कितौ
यस्योक्तौ तस्य क्रमादाद्यन्तौ स्तः षट् त्सन्तः षट् सन्तः
ङ्णोः कुक्टुक्शरि ८।३।२८ वास्तः प्राङ्क् षष्ठः प्राङ् षष्ठः
सुगण्ट्षष्ठः सुगण् षष्ठः नश्च ८।३।३० नान्तात्परस्य
सस्य धुड्वा सन्त्सः सन्सः शितुक् ८।३।३१ पदान्तस्य नस्य
शेपरेतुग्वा सञ्च्छम्भुः सञ्छम्भुः सञ्च्शम्भुः सञ्शम्भुः
ङमो ह्रस्वादचि ङमुण् नित्यम् ८।३।३२ ह्रस्वात्परो
यो ङम् तदन्तं यत्पदन् तस्मात्परस्याचो नित्यं ङमुट् प्रत्य-
ङ्ङात्मा सुगण्णीशः सन्नच्युतः समः सुटि ८।३।५ समोरुः
सुटि अत्रानुनासिकः पूर्वस्यतुवा ८।३।२ अत्ररुप्रकरणेरोः पू
र्वस्यानुनासिकोवा अनुनासिकात्परोनुस्वारः ८।३।४ अनुनासि
कं विहायरोः पूर्वस्मात्परोऽनुस्वारागमः खरवसानयोर्विसर्ज-
नीयः ८।३।१५ खरि अवसानेच पदान्तस्यरस्य विसर्गः सम्पु
ङ्कानां सोवक्तव्यः सँस्कर्त्ता संस्कर्त्ता पुमः खय्यम्परे ८।३।६
अम्परे खयि पुमोरुः पुंस्कोकिलः पुँस्कोकिलः नश्छव्यप्र-
शान् ८।३।७ अम्परे छवि नान्तस्यपदस्यरुः विसर्जनीय-
स्यसः ८।३।३४ खरि चक्रिंस्त्रायस्व चक्रिंस्त्रायस्व अप्रशा
न् किम् प्रशान्तनोति पदान्तस्य किम् हन्ति नॄन् पे ८।३।१०
नॄनित्यस्य रुर्वापे कुप्वोः ≍क ≍पौच ८।३।३७ कवर्गे पवर्गे च
विसर्गस्य ≍क ≍पौस्तः चाद्विसर्गः नॄँ≍पाहि नॄँः पाहि नॄंः पाहि नॄं≍पाहि
नॄन्पाहि तस्यपरमाम्रेडितम् ८।१।२ द्विरुक्तस्य परमाम्रेडितं
स्यात् कानाम्रेडिते ८।३।१२ कान्नकारस्य रुराम्रेडिते काँस्का-

न् कांस्कान् छेच ६।१।७३ ह्रस्वस्य छे तुक् शिवच्छाया पदान् ना-
ड्वा ६।१।७६ दीर्घात्पदान्तात् छे तुक् वा लक्ष्मीच्छाया लक्ष्मी छाया
इति हल्संधिः विसर्ज्जनीयस्य सः ८।३।३४ खरि विष्णुस्त्रा-
ता वाशरि ८।३।३६ शरि विसर्गस्य विसर्गो वा हरिः शेते हरि-
श्शेते ससजुषोरुः ८।२।६६ पदान्तस्य सस्य सजुषश्च रुः स्या-
त् अतोरोरप्लुतादप्लुते ६।१।११३ अप्लुतादतः परस्य रोरुः स्यादप्लुते ऽति शिवोऽर्च्यः हशि च ६।१।११४ तथा शिवोवन्द्यः भोभगोअ-
घो अपूर्वस्य योऽशि ८।३।१७ एतत्पूर्वस्य रोर्य्यादेशोऽशि देवाइह
देवायिह भोस् भगोस् अघोस् इति सान्तानिपाताः तेषां रोर्य्य-
त्वे कृते हलि सर्वेषाम् ८।३।२२ भोभगो अघो अपूर्वस्य यस्य
लोपः स्याद्धलि सर्वेषामनेन भोदेवाः भगोनमस्ते अघो याहि दे
वायांति रोऽसुपि ८।३।६९ अन्हो रेफादेशो नतु सुपि अहरहः
अहर्गणः रोरि ८।३।१४ रेफस्य रेफे परे लोपः ढ्रलोपे पूर्वस्य दी
र्घोऽणः ६।३।११० ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः
पुनारमते हरीरम्यः शम्भू राजते अणः किम् तृढः वृढः मन-
स्रथ इत्यत्र रुत्वे कृते हसि चेत्युत्वे रोरीति लोपे च प्राप्ते विप्र-
तिषेधे परं कार्य्यम् १।४।२ तुल्यबलविरोधे परं कार्य्यं स्यात् इ-
ति लोपे प्राप्ते पूर्वत्रासिद्धम् इति रोरीत्यस्यासिद्धत्वादुत्वमेव म-
नोरथः एतत्तदोस्सुलोपोऽकोरनञ्समासे हलि ६।१।१३२ अ-
ककारयोरेतत्तदोर्य्यस्सुस्तस्य लोपो हलि नतु नञ् समासे एष वि-
ष्णुः स शम्भुः अकोः किम् एषको रुद्रः अनञ् समासे किम्
असश्शिवः हलि किम् एषोऽत्र सोचि लोपे चेत्पादपूरणम् ६।
१।१३४ स इत्यस्य सो[illegible]स्स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत
सेमामविड्ढि प्रभृतिम् सैष दाशरथी रामः इति विसर्गसन्धिः
अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५ धातुं प्रत्यय-
म् प्रत्ययान्तं च वर्ज्जयित्वा अर्थवच्छब्दरूपम् प्रातिप

दिकसंज्ञंस्यात् कृत्तद्धितसमासाश्च १।२।४६ कृत्तद्धितान्तौ समासश्च तथास्युः स्वौजसमौट्छष्टाभ्याम्भिस्ङे भ्याम्भ्यस् ङसि भ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४।१।२ सु औ जस् इति प्रथमा अम् औट् शस् इति द्वितीया टा भ्याम् भिस् इति तृतीया ङे भ्याम् भ्यस् इति चतुर्थी ङसि भ्याम् भ्यस् इति पञ्चमी ङस् ओस् आम् इति षष्ठी ङि ओस् सुप् इति सप्तमीङ्याप्प्रातिपदिकात् ४।१।१ प्रत्ययः ३।१।१ परश्च ३।१।२ इत्यधिकृत्यङ्यन्त आदाबन्तात्प्रातिपदिकाच्चपरेस्वादयः प्रत्ययाः स्युः सुप १।४।१०३ सुपस्त्रीणि त्रीणिवचनान्येकश एकवचन द्विवचन बहुवचन संज्ञानिस्युः द्व्येकयोर्द्विवचनैकवचने १।४।२२ द्वित्वैकत्वयोरेतेस्तः बहुषुबहुवचनम् १।४।२१ बहुत्वे एतत् स्यात् विरामो ऽवसानम् १।४।११० वर्णानाम भावो ऽवसानसंज्ञः स्यात् रुत्वविसर्गौ रामः सरूपाणामेकशेष एकविभक्तौ १।२।६४ एकविभक्तौयानि सरूपाण्येवदृष्टानि तेषामेक एवशिष्यते प्रथमयोः पूर्वसवर्णः ६।१।१०२ अकः प्रथमाद्वितीययो रचिपूर्वसवर्णदीर्घ एकादेशस्स्यात् इति प्राप्ते नादिचि ६।१।१०४ आदिचिन पूर्वसवर्णदीर्घः वृद्धिरेचि रामौ बहुषु बहुवचनम् १।४।२१ चुटू १।३।७ प्रत्ययाद्यौ चुटू इतौस्तः विभक्तिश्च १।४।१०४ सुप्तिङौ विभक्तिसंज्ञौस्तः नविभक्तौ तुस्माः १।३।४ विभक्तिस्थास्तवर्ग समानेतः इति सस्य नेत्त्वम् रामः रामौ रामाः एकवचनंसम्बुद्धिः २।३।४९ सम्बोधनेप्रथमायाः एकवचनं सम्बुद्धिसंज्ञंस्यात् यस्मात्प्रत्ययविधिस्तदादि प्रत्यये ऽङ्गम् १।४।१३ यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपन्तस्मिन्नङ्गंस्यात् एङ्ह्रस्वात् सम्बुद्धेः ६।१।६९ एङन्तात्ह्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् हे राम हे रामौ हेरामाः अमिपूर्वः ६।१।१०७

अको ऽस्यचि पूर्वरूपमेकादेशः रामम् रामौ लशक्कतद्धिते १।३।८ तद्धितवर्ज्जप्रत्ययाद्या लशकवर्गा इतः स्युः तस्माच्छसोनः पुंसि ६।१।१०३ पूर्वसवर्णदीर्घात्परोयः शसः सतस्यनः स्यात्पुंसि अट्कुप्वाङ्नुम्व्यवाये ऽपि ८।४।२ अट्कवर्गपवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवमिलितैश्च व्यवधाने ऽपि रषाभ्यां नस्य णः समानपदे इति प्राप्ते पदान्तस्य ८।४।३७ नस्य णो न रामान् टाङसिङसामिनात्स्याः ७।१।१२ अदन्तादङ्गादीनामिनादयः स्युः णत्वम् रामेण सुपि च ७।३।१०२ यञादौ सुपि अतो ऽङ्गस्य दीर्घः रामाभ्याम् अतोभिसऐस् ७।१।९ अनेकाल् शित्सर्वस्य रामैः ङेर्यः ७।१।१३ अतो ऽङ्गात्परस्य ङे र्यादेशः स्थानिवदादेशोनल्विधौ १।१।५६ आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधौ इति स्थानिवत्त्वात् सुपिचेति दीर्घः रामाय रामाभ्याम् बहुवचने झल्येत् ७।३।१०३ झलादौ बहुवचने सुप्यतो ऽङ्गस्यैकारः रामेभ्यः सुपि किम् पचध्वम् वावसाने ८।४।५६ अवसाने झलाञ्चरो वा रामात् रामाद् रामाभ्याम् रामेभ्यः रामस्य ओसिच ७।३।१०४ अतोऽङ्गस्यैकारः रामयोः ह्रस्वनद्यापो नुट् ७।१।५४ ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः नामि ६।४।३ नामि अजन्ताङ्गस्य दीर्घः रामाणाम् रामे रामयोः एत्वे कृते आदेशप्रत्यययोः ८।३।५९ इण्कुभ्यामपरस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सस्तस्य मूर्द्धन्यादेशः ईषद्विवृतस्य सस्य तादृश एव षः रामेषु एवंरूपाद्यो ऽप्यदन्ताः सर्वादीनि सर्वनामानि १।१।२७ सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् स्वमज्ञातिधनाख्यायाम् अन्तरम्बहिर्योगोपसंव्यानयोः

त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु-
किम् जसश्शी ७।१।१७ अदन्तात्सर्वनाम्नो जसः शीस्यात्
अनेकाल्त्वात्सर्वादेशः सर्वे सर्वनाम्नः स्मै ७।१।१४ अतः स-
र्वनाम्नो ङेः स्मै सर्वस्मै ङसि ङ्योः स्मात्स्मिनौ ७।१।१५ अ-
तस्सर्वनाम्न एतयो रेतौ स्तः सर्वस्मात् आमि सर्वनाम्नः सुट्
७।१।५२ अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडाग-
मः एत्वषत्वे सर्वेषाम् सर्वस्मिन् शेषंरामवत् एवं विश्वादयो
ऽप्यदन्ताः उभशब्दो द्विवचनान्तः उभौ २ उभाभ्याम् ३ उभयोः
२ तस्येह पाठो ऽकजर्थः डतरडतमौ प्रत्ययौ प्रत्ययग्रहणे त-
दन्त ग्रहणमिति तदन्ता ग्राह्याः नेम इत्यर्धे समः सर्व्व प-
र्य्याय स्त्वल्पपर्याय स्तु न गृह्यते यथासंख्यमनुदेशः समा-
नामिति ज्ञापकात् पूर्वपरा वर दक्षिणोत्तरापराधराणि व्यव-
स्थायामसंज्ञायाम् १।१।३४ एतेषां व्यवस्थायामसंज्ञायां सर्व
नाम संज्ञा गणसूत्रात्सर्वत्र या प्राप्ता साजसि वा पूर्वे पूर्वाः अ-
संज्ञायां किम् उत्तराः कुरवः स्वाभिधेयापेक्षावधिनियमो व्य-
वस्था व्यवस्थायाङ्किम् दक्षिणागाथकाः कुशला इत्यर्थः स्व-
मज्ञाति धनाख्यायाम् १।१।३५ ज्ञाति धनान्य वाचिनः स्वश-
ब्दस्य प्राप्ता संज्ञाजसि वा स्वे स्वाः आत्मीया आत्मान इति
वा ज्ञाति धन वाचिनस्तु स्वाः ज्ञातयो ऽर्था वा अन्तरम्ब हि-
र्य्योगोप संव्यानयोः १।१।३६ बाह्ये परिधानीये चार्थे ऽन्तर
शब्दस्य प्राप्ता संज्ञाजसि वा अन्तरे अन्तरा वा गृहा बाह्या इ-
त्यर्थः अंतरे अन्तरा वा शाटकाः परिधानीया इत्यर्थः पूर्वा-
दिभ्यो नवभ्यो वा ७।१।१६ एभ्यो ङसिङ्योः स्मात्स्मिनौ वा
स्तः पूर्वस्मात् पूर्वात् पूर्वस्मिन् पूर्वे एवं परादीनाम् शेषं स-
र्ववत् प्रथम चरम तयाऽल्पार्धकति पय नेमाश्च १।१।३३ ए-
ते जसि उक्त संज्ञा वास्युः प्रथमे प्रथमाः तयः प्रत्ययः द्वित-

ये द्वितयाः शेषंरामवत् नेमे नेमाः शेषंसर्ववत् नीयस्यङि त्स्रु-
वा द्वितीयस्मै द्वितीयायै त्यादि एवंतृतीयः निर्ज्जरः जराया ज-
रसन्यतरस्याम् ७।२।१०१ अजादौ विभक्तौ पदाङ्गाधिकारेन
स्य तदन्तस्य च निर्दिश्यमानस्यादेशा भवंति एकदेशविकृतम
नन्यवदितिजरशब्दस्य जरस् निर्जरसौ निर्ज्जरस इत्यादि पक्षे
हलादौच रामवत् विश्वपाः दीर्घाज्जसिच ६।१।१०५ दीर्घाज
सि इचिच नपूर्वसवर्णदीर्घः विश्वपौ विश्वपाः हे विश्वपाः वि-
श्वपाम् विश्वपौ स्रुङनपुंसकस्य १।१।४३ स्वादिपञ्चवचना
निसर्वनामस्थान संज्ञानि स्युरक्लीबस्य स्वादिष्वसर्वनामस्था
ने १।४।१७ कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वप-
दं स्यात् यचि भम् १।४।१८ यादिष्वजादिषुच कप्रत्ययाव-
धिषु स्वादिष्वसर्वनाम स्थानेषु पूर्वंभसंज्ञंस्यात् आकडारा
देका संज्ञा १।४।१ इतऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यै
कैवसंज्ञा ज्ञेया यापराऽनवकाशाच आतो धातोः ६।४।१४० आ-
कारान्तोयो धातुस्तदन्तस्य भस्याङ्गस्य लोपः अलोऽन्त्यस्य वि-
श्वपः विश्वपा विश्वपाभ्यामित्यादि एवंशंखध्मादयः धातोः-
किम् हा हान् हरिः हरी जसिच ७।३।१०९ ह्रस्वान्तस्याङ्गस्य
गुणः हरयः ह्रस्वस्यगुणः ७।३।१०८ सम्बुद्धौ हे हरे हरिम् ह-
री हरीन् शेषो घ्यसखि १।४।७ शेषइतिस्पष्टार्थम् ह्रस्वोया-
विदुतौ तदन्तं सखि वर्जं घिसंज्ञम् आङो नास्त्रियाम् ७।३।१२०
घेः परस्याङो नास्यादस्त्रियाम् आङिति टासंज्ञा प्राचां हरिणा
हरिभ्याम् हरिभिः घेर्ङिति ७।३।१११ घिसंज्ञस्य ङिति स्रुपिगु
णः हरये ङसिङसोश्च ६।१।११० एङोङसिङसोरति पूर्वरूप
मेकादेशः हरेः हर्योः हरीणाम् अच्चघेः ७।३।११९ इदुद्भ्या
मुत्तरस्य ङेरौत् घेरत् हरौ हरिषु एवंकव्यादयः अनङ्सौ ७।
१।९३ सख्युरंगस्यानङादेशोऽसंबुद्धौ सौ अलोऽन्त्यस्य

र्वउपधा १।१।६५ अन्त्यादलः पूर्वोवर्णः सउपधासंज्ञः सर्वनामस्थाने चासम्बुधौ ६।४।८ नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने अपृक्त एकाल् प्रत्ययः १।२।४१ एकाल् प्रत्ययः सोऽपृक्तसंज्ञः स्यात् हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल् ६।१।६८ हलन्तात्परं दीर्घौ योङ्यापौ तदन्ताच्च परं सुतिसी त्येतदपृक्तं हल्लुप्यते नलोपः प्रातिपदिकान्तस्य ८।२।७ प्रातिपदिकसंज्ञकम् यत्पदन्तदन्तस्य नस्य लोपः सखासख्युरसम्बुद्धौ ७।१।९२ सख्युरंगात्परं सम्बुद्धि वर्ज्जं सर्वनामस्थानं णिद्वत्स्यात् अचोञ्णिति ७।२।११५ अजन्ताङ्गस्य वृद्धिर्ञ्णिति णिति चपरे सखायौ सखायः हे सखे सखायम् सखायौ सखीन् सख्या सख्ये ख्यत्यात्परस्य ६।१।११२ खितिशब्दाभ्यां खीती शब्दाभ्यां कृतयणादेशाभ्याम् परस्य ङसिङसोर नउः सख्युः औत् ७।३।११८ इतःपरस्य ङेरौत् सख्यौ शेषं हरिवत् पतिस्समास एव १।४।८ घिसंज्ञः पत्ये पत्युः २ पत्यौ शेषं हरिवत् समासेतु भूपतये कतिशब्दो बहुवचनान्तः बहुगण वतुडति संख्या १।१।२३ एषा संख्यासंज्ञास्यात् डतिच १।१।२५ डत्यन्ता संख्या षट् संज्ञास्यात् षड्भ्योलुक् १।२।२७ षड्भ्यः परयोर्जश्शसोः लुक् प्रत्ययस्य लुक् श्लुलुपः १।१।६१ लुक् श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् प्रत्ययलोपेप्रत्ययलक्षणम् १।१।६२ प्रत्यये लुप्तेपि तदाश्रितं कार्य्यंस्यात् इति जसि चेति गुणे प्राप्ते न लुमताङ्गस्य १।१।६३ लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्य्यं न स्यात् कति कतिभिः कतिभ्यः २ कतीनाम् कतिषु युष्मदस्मद् षट् संज्ञकास्त्रिषु सरूपाः त्रिशब्दोनित्यं बहुवचनान्तः त्रयः त्रीन् त्रिभिः त्रिभ्यः २ त्रेस्त्रयः ७।१।५३ त्रिशब्दस्य त्रयादेशःस्या-

न् आभित्रयाणां त्रिषु गौणत्वेऽपि प्रियत्रयाणाम् त्यदादीनाम: ७।२।१०२ एषामकारो विभक्तौ द्विपर्य्यन्ता नामे वेष्टिः द्वौ द्वौ द्वाभ्याम् द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयोः पातिलोकमिति पपीः सूर्य्यः दीर्घाज्जसि च ६।१।१०५ पप्यौ पप्यः हे पपीः पपीम् पपीन् पप्या पपीभ्याम् पपीभिः पप्ये पपीभ्यः पप्यः पप्योः दीर्घत्वान्न नुट् पप्याम् ङौ तु सवर्णदीर्घः पपी पप्योः पपीषु एवं वातप्रम्यादयः बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी यू स्त्र्याख्यौ नदी १।४।३ ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः प्रथमलिंगग्रहणाच्च पूर्वं स्त्र्याख्यस्योपसर्ज्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः अंबार्थनद्योर्ह्रस्वः सम्बुद्धौ हे बहुश्रेयसि आण्नद्याः ७।३।११२ नद्यन्तात्परेषां ङितामाडागमः आटश्च ६।१।९० आटोऽचि परे वृद्धिरेकादेशः बहुश्रेयस्यै बहुश्रेयस्याः बहुश्रेयसीनाम् ङेराम्नद्याम्नीभ्यः ७।३।११६ नद्यन्तादाबन्तान्नीशब्दात्परस्य ङेः राम् बहुश्रेयस्याम् शेषं पपीवत् अङ्यन्तत्वान्न सुलोपः अतिलक्ष्मीः शेषं बहुश्रेयसीवत् प्रधीः अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७ श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चांगस्येयङुवङौ स्तोऽजादौ प्रत्यये इति प्राप्ते एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२ धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये प्रध्यौ प्रध्यः प्रध्यम् प्रध्यौ प्रध्यः प्रध्यि शेषम् पपीवत् एवं ग्रामणीः ङौ तु ग्रामण्याम् अनेकाचः किम् नीः नियौ नियः अमि शसि च परत्वादियङ् नियम् नियः ङेः राम् नियाम् असंयोगपूर्वस्य किम् सुश्रियौ यवक्रियौ गतिश्च १।४।६० प्रादयः क्रियायोगे गतिसंज्ञाः स्युः गतिकारकेतरपूर्वपदस्य यण् नेष्यते शुद्धधियौ नभूसुधियोः ६।४।८५ एतयोरचि सुपि य-

ण् नसकधियो सुधियइत्यादि सुखमिच्छतीति सुखीः सुतीः सुख्यौ सुत्यौ सुख्युः सुत्युः शेषम्प्रधीवत् शंभुर्हरिवत् एवम् भान्वादयः तृज्वत्क्रोष्टुः ७।१।९५ असम्बुद्धौ सर्वनामस्थाने क्रोष्टुशब्दस्य क्रोष्टृ प्रयोक्तव्य इत्यर्थः ऋतोङिसर्वनामस्थानयोः ७।३।११० ऋतोङः गस्य गुणो ङौ सर्वनामस्थाने च इति प्राप्ते ऋदुशनस्पुरुदंसोऽनेहसाञ्च ७।१।९४ ऋदन्तानामुशनसादीनाञ्चानङ् स्यादसम्बुद्धौ सौ अप्तृन्तृच् स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६।४।११ अबादीनामुपधाया दीर्घो सबुद्धौ सर्वनामस्थाने क्रोष्टा क्रोष्टारौ क्रोष्टारः क्रोष्टून् विभाषा तृतीयादिष्वचि ७।१।९७ अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् क्रोष्ट्रा क्रोष्ट्रे ऋत उत् ६।१।१११ ऋतोङसिङसोः रति उदेकादेशो रपरः रात्सस्य ८।२।२४ रेफात्संयोगान्तस्यैव लोपो नान्यस्य रस्य विसर्गः क्रोष्टुः क्रोष्ट्रोः नुमचिर तृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन क्रोष्टूनाम् क्रोष्टरि पक्षे हलादौ च शम्भुवत् हूहूः हूह्वौ हूहूम् इत्यादि अतिचमूशब्दे तु नदीकार्यं विशेषः हे अतिचमु अतिचम्वै अतिचम्वाः अतिचमूनाम् अतिचम्वां खलपूः ओः सुपि ६।४।८३ धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि खलप्वौ खलप्वः एवं सुल्वादयः स्वभूः स्वभुवौ स्वभुवः वर्षाभूः वर्षाभ्वश्च ६।४।८४ अस्य यण् स्यादचि सुपि वर्षाभ्वावित्यादि दृन्भूः दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः दृन्भ्वौ एवं करभूः धाता हे धातः धातारौ धातारः ऋवर्णान्नस्य णत्वं वाच्यम् धातॄणाम् एवन्नप्त्रादयः नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् तेनेह न पिता पितरौ पितरः पितरम् शेषं धातृवत् एवञ्जामातादयः ना नरौ नृ च ६।४।६

अस्य नामिवादीर्घः नृणाम् नृणाम् ओतोणित् ७।१।९०ओ-
काराद्विहितम् सर्वनामस्थानंणिद्वत् गोः गावौ गावः औतोऽम्
शसोः ६।१।९३ ओकारादऽम्शसोरचि आकार एकादेशः गा-
म् गावौ गाः गवा गवे गोः गोः इत्यादि रायोहलि ७।२।८५ अ-
स्या कारादेशो हलि विभक्तौ राः रायौ रायः राभ्या मित्यादि ग्लौः
ग्लावौ ग्लावः ग्लौभ्यामित्यादि इत्यजन्ताः पुल्लिङ्गाः रमा औ-
ङ आपः ७।१।१८ आबन्तादङ्गात्परस्यौङ २शीस्यात् औङि-
त्यौकारविभक्तेः संज्ञा रमे रमाः सम्बुद्धौच ७।३।१०६ आपए
कारः स्यात्सम्बुद्धौ एङ्ह्रस्वादितिसम्बुद्धिलोपः हे रमे हे रमे
हे रमाः रमाम् रमे रमाः आङिचापः ७।३।१०५ आङि ओ-
सिचापएकारः रमया रमाभ्याम् रमाभिः याडापः ७।३।११२
आपोङितोयाट् वृद्धिः रमायै रमाभ्यां रमाभ्यः रमायाः रमा-
याः रमयोः रमाणाम् रमायाम् रमासु एवन्दुर्गाम्बिकादयः
सर्वनाम्नः स्याड्ह्रस्वश्च ७।३।११४ आबन्तात्सर्वनाम्नोङि-
तः स्याडापश्च ह्रस्वः सर्वस्यै सर्वस्याः सर्वासाम् सर्वस्याम् शे-
षं रमावत् एवं विश्वादय आबन्ताः विभाषादिक्समासे बहु-
व्रीहौ १।१।२८ सर्वनामतावा उत्तर पूर्वस्यै उत्तर पूर्वायै तीय
स्येति वासंज्ञा द्वितीयस्यै द्वितीयायै एवन्तृतीया अम्बार्थेति
ह्रस्वः हे अम्ब हे अक्क हे अल्ल जरा जरसौ जरे इत्यादि पक्षे
रमावत् गोपा विश्वपावत् मतीः मत्या ङिति ह्रस्वश्च १।४।६ इ-
यङ् वङ् स्थानौ स्त्रीशब्द भिन्नौ नित्यस्त्रीलिंगा वीदूतौ ह्र-
स्वौच इवर्णो वर्णौ स्त्रियां वा नदी संज्ञौस्तोङिति मत्यै मतये
मत्याः मत्याः मतेः मतेः इदुभ्यां नदीसंज्ञकाभ्याम् परस्यङे
राम् मत्याम् मतौ शेषं हरिवत् एवम्बुद्ध्या दयः त्रिचतुरोः
स्त्रियांतिसृचतसृ ७।२।९९ स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ
अचिरऋतः ७।२।१०० तिसृचतसृ एतयो ऋकारस्य रेफा-

देशस्स्यादचि गुणदीर्घोत्वानामपवाद त्रिस्रः त्रिस्रः त्रिसृ-
भिः त्रिसृभ्यः त्रिसृभ्यः आमि नुट् न तिसृचतसृ ६।४।४ एत
योर्नामि दीर्घो न तिसृणाम् तिसृषु द्वे द्वे द्वाभ्याम् द्वाभ्याम् द्व
योः द्वयोः गौरी गौर्यौ गौर्यः हे गौरि गौर्य्यौ विस्यादि एवम्न
द्यादयः लक्ष्मीः शेषं गौरीवत् एवन्तरी तन्त्र्यादयः स्त्री हे स्त्रि
स्त्रियाः ६।४।७९ अस्येयङ् जादौ प्रत्यये परे स्त्रियौ स्त्रियः
वामृ शसोः ६।४।८० स्त्रिया वा इयङ् स्त्रियम् स्त्रीम् स्त्रियः
स्त्रीः स्त्रिया स्त्रियै स्त्रियाः परत्वान्नुट् स्त्रीणाम् स्त्रीषु श्रीः
श्रियौ श्रियः नेयङुवङ् स्थानावस्त्री १।४।४ इयङुवङोः
स्थितिर्ययोस्तावी दूतौ नदीसंज्ञौ नस्तो न तु स्त्री हे श्रीः श्रि-
ये श्रिये श्रियाः श्रियः वामि १।४।५ इयङुवङ् स्थानौस्त्र्या-
ख्यौ यू आमि वा नदी संज्ञौ स्तो न तु स्त्री श्रीणाम् श्रियाम् श्रि
यि श्रियाम् धेनुर्मतिवत् स्त्रियाञ्च ७।१।९६ स्त्रीवाची क्रो
ष्टु स्तृजन्त वद्रूपं लभते ऋन्नेभ्योङीप् ४।१।५ ऋदन्तेभ्यो ना
न्तेभ्यश्च स्त्रियां ङीप् क्रोष्ट्री गौरीवत् भ्रूः श्रीवत् स्वयंभूः
पुंवत् नषट् स्वस्त्रादिभ्यः ४।१।१० ङीप् टापौ न स्वसा तिस्र
श्चतस्रश्च ननान्दा दुहिता तथा याता मातेति सप्तैते स्वस्त्राद
य उदाहृताः स्वसा स्वसारौ माता पितृवत् शासिमातृः द्यौ-
गौवत् राः पुंवत् नौग्लौवत् इत्यजन्ताः स्त्रीलिङ्गाः अतोऽ
म् ७।१।२४ अतोऽङ्गात् क्लीबात् स्वमोरम् ज्ञानम् एङ् ह्र-
स्वादिति हल्लोपः हे ज्ञान नपुंसकाच्च ७।१।१९ क्लीबादौङः शी
भ संज्ञायाम् यस्येति च ६।४।१४८ ईकारे तद्धिते च भस्येवर्णा
वर्णयो र्लोपः इत्यलोपे प्राप्ते औङः श्याम् प्रतिषेधो वाच्यः
ज्ञाने जश्शसोः शिः ७।१।२० क्लीबात् शि सर्वनामस्थानं १।१।
४२ नपुंसकस्य झलचः ७।१।७२ झलन्तस्याजन्तस्य च क्ली
बस्य नुम् स्यात् सर्वनामस्थाने मिदचोऽन्त्यात्परः १।१।४७

अचामन्त्यादि योऽन्त्यस्तस्मात् परस्यैवांतावयवो मित्स्या-
त् उपधादीर्घः ज्ञानानि पुनस्तद्वत् शेषम्पुंवत् एवन्धनव-
नफलादयः अड्डुतरादिभ्यः पञ्चभ्यः ७।१।२५ एभ्यः क्ली
बेभ्यः स्वमोरद्डादेशः टेः ६।४।१४३ डितिभस्यटेर्लोपः कत
रत् कतरद् कतरे कतराणि हे कतरत् शेषम्पुंवत् एवंकतम
त् इतरत् अन्यत् अन्यतरत् अन्यतमस्य त्वन्यतममित्ये
व एकतरात्प्रतिषेधः एकतरम् ह्रस्वोनपुंसकेप्रातिपदिक
स्य १।२।४७ अजन्तस्येत्येव श्रीपम् ज्ञानवत् स्वमोर्नपुं-
सकात् ७।१।२३ लुक्स्यात् वारि इकोऽचिविभक्तौ ७।१।७३
इगन्तस्यक्लीबस्य नुमचिविभक्तौ वारिणी वारीणि नलुमने
त्यस्यानि त्यत्वात्पक्षे सम्बुद्धि निमित्तोगुणः हे वारि हे वारे-
घेर्ङितीति गुणे प्राप्ते वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्ववि
प्रतिषेधेन वारिणे वारिणः वारिणः वारिणोः नुमचिरेति नुट्
वारीणाम् वारिणि हलादौ हरिवत् अस्थिदधिसक्थ्यक्ष्णा
मनङुदात्तः ७।१।७५ टादावचि अल्लोपोनः ६।४।१३४ अङ्गा
वयवोऽसर्वनामस्थान यजादिस्वादिपरोयोऽनस्तस्याकारस्य
लोपः दध्ना दध्ने दध्नः दध्नोः दध्नां विभाषाङिश्योः ६।४।१३६
अङ्गावयवोऽसर्वनामस्थान परोयोऽनस्तस्याकारस्य लोपो
वाङिश्योः दध्नि दधनि शेषं वारिवत् एवमस्थि सक्थ्यक्षि
सुधि सुधिनी सुधीनि हे सुधे हे सुधि सुधिनेत्यादि मधु-
मधुनी मधूनि हेमधो हेमधु सुलु सुलुनी सुलूनि सुलुने-
त्यादि धातृ धातृणी धातृणि धातृणाम् हे धातः एवंज्ञात्रा
दयः एच इग्घ्रस्वादेशे १।१।४८ प्रद्यु प्रद्युनी प्रद्यूनि प्रद्युने-
त्यादि प्ररि प्ररिणी प्ररीणि प्ररिणा एकदेशविकृतमनन्यवत्
प्रराभ्याम् प्ररीणाम् सुनु सुनुनी सुनूनि सुनुनेत्यादि इत्य
जन्तानपुंसकलिङ्गाः होढः ८।२।३१ हस्यढः झलिपदान्ते-

च लिट् लिड् लिहौ लिहः लिड्भ्याम् लिट्स लिट्त्स दादेर्धातोर्घः ८।२।३२ झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः एकाचो बशो भष् झषन्तस्य स्ध्वोः ८।२।३७ धात्ववयवस्यैकाचो झषंतस्य बशो भष् से ध्वे पदान्ते च धुक् धुग् दुहौ दुहः धुग्भ्याम् धुक्ष वा द्रुह मुह ष्णुह ष्णिहाम् ८।२।३३ एषां हस्य वा घो झलि पदान्ते च ध्रुक् ध्रुग् ध्रुट् ध्रुड् द्रुहौ द्रुहः ध्रुग्भ्याम् ध्रुड्भ्याम् ध्रुक्ष ध्रुट्स ध्रुट्त्स एवं मुहः धात्वादेः षः सः ६।१।६४ स्नुट् स्नुड् स्नुक् स्नुग् एवं स्निह् इग्यणः संप्रसारणम् १।१।४५ वाह ऊठ् ६।४।१३२ भस्य वाहः संप्रसारणमूठ् संप्रसारणाच्च ६।१।१०८ संप्रसारणादचि पूर्वरूपमेकादेशः एत्येधत्यूठ्सु वृद्धिः विश्वौहः इत्यादि चतुरनडुहोरामुदात्तः ७।१।९८ सावनडुहः ७।१।८२ नुम् अनड्वान् अम् सम्बुद्धौ ७।१।९९ हे अनड्वन् अनड्वाहौ अनड्वाहः अनडुहः वसुस्रंसुध्वंस्वनडुहां दः ८।२।७२ सान्तस्य वस्वन्तस्य स्रंसादेश्च दस्स्यात्पदान्ते अनडुद्भ्यामित्यादि सान्तेति किम् विद्वान् पदान्ते इति किम् स्रस्तम् ध्वस्तम् सहेः साडः सः ८।३।५६ साड्रूपस्य सहेस्सस्य मूर्धन्यादेशः तुराषाट् तुराषाड् तुरासाहौ तुरासाहः तुराषाड्भ्यामित्यादि दिव औत् ७।१।८४ दिविति प्रातिपदिकस्यौ स्यात्सौ सुद्यौः सुदिवौ दिव उत् ६।१।१३१ पदान्ते सुद्युभ्याम् इत्यादि चत्वारः चतुरः चतुर्भिः चतुर्भ्यः षट्चतुर्भ्यश्च ७।१।५५ एभ्य आमो नुडागमः रषाभ्यान्नो णः समानपदे ८।४।१ अचो रहाभ्यां द्वे ८।४।४६ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः चतुर्णाम् रोः सुपि ८।३।१६ रोरेव विसर्गः सुपि षत्वम् षस्य द्वित्वे प्राप्ते शरोचि ८।४।४९ अचि परे शरो न द्वे स्तः चतुर्षु मो नो धातोः ८।२।६४ पदान्ते प्रशान् किमः कः ७।२।१०३ विभक्तौ कः कौ के इत्यादि सर्ववत्

न् इदमोमः ७।२।१०८ सौत्यदाद्यत्वापवादः इदोऽय् पुंसि ७।
२।१११ इदम इदोऽय् सौ पुंसि अयम् त्यदाद्यत्वे अतोगुणे ६।
१।९७ अपदान्तादतो गुणेपररूपमेकादेशः दश्च ७।२।१०९
इदमो दस्य मः स्यात् विभक्तौ इमौ इमेत्यदादेस्सम्बोधनन्ना-
स्ती त्युत्सर्गः अनाप्यकः ७।२।११२ अककारस्य इदम इदो
ऽनापि विभक्तौ आबिति टाइत्यारभ्य सुपः पकारेण प्रत्या
हारः अनेन हलि लोपः ७।२।११३ अककारस्येदम इदो लो-
प आपि हलादौ नानर्थके ऽलोऽन्त्यविधिरनभ्यासविकारे
आद्यन्तवदेकस्मिन् १।१।२१ एकस्मिन् क्रियमाणं कार्य्यमा-
दाविवान्त इवस्यात् सुपिचेति दीर्घः आभ्याम् नेदमदसोर
कोः ७।१।११ अककारयोरिदमदसोर्भिस ऐस् न एभिः अ-
स्मै आभ्याम् एभ्यः अस्मात् अस्य अनयोः एषाम् अस्मि
न् एषु द्वितीयाटौस्स्वेनः २।४।३४ इदमेतदोरन्वादेशे किं-
चित्कार्यं विधातुमुपात्तस्य कार्य्यान्तरं विधातुम्पुनरुपादा-
नमन्वादेशः यथा अनेन व्याकरणमधीतमेनञ् छंदोऽध्या
पयेति अनयोः पवित्रंकुलम् एनयोः प्रभूतं स्वामिनि ए-
नम् एनौ एनान् एनेन एनयोः राजा नङिसम्बुद्ध्योः ८।२
।८ नस्यलोपो न ङौ सम्बुद्धौ च हे राजन् ङावुत्तरपदे प्रतिषे-
धो वक्तव्यः ब्रह्मनिष्ठः राजानौ राजानः राज्ञः नलोपः सुप्
स्वरसंज्ञातुग्विधिषु कृति ८।२।२ सुब्विधौ स्वरविधौ संज्ञा
विधौ कृति तुग्विधौ नलोपोऽसिद्धो नान्यत्र राजाश्व इत्या-
दौ इत्यसिद्धत्वादात्वमेत्वमैस्त्वञ्च न राजभ्यां राजभिः रा-
जभ्यः यज्वा यज्वानौ यज्वानः नसंयोगाद्वमन्तात् ६।४।
१३७ वमन्तसंयोगादनोकारस्य लोपो न यज्वनः यज्वना
यज्वभ्याम् ब्रह्मणः ब्रह्मणा इन् हन् पूषार्य्यम्णां शौ ६।४
।१२ एषांशावेवोपधाया दीर्घो नान्यत्र इति निषेधे प्राप्ते सौ च

६।४।१३ इन्नादीनामुपधाया दीर्घो ऽसम्बुद्धौसौ वृत्रहा हे वृत्रहन् एकाजुत्तरपदेणः ८।४।१२ एकाजुत्तरपदं यस्यत स्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान् न-नुम् विभक्तिस्थस्य नस्यणः वृत्रहणौ होहन्तेर्ञ्णिन्नेषु ७।३।५४ ञिति णिति प्रत्ययेन कारेचपरे हन्ते र्हकारस्य कुत्व-म् वृत्रघ्नः इत्यादि एवंशार्ङ्गिन् यशस्विन् अर्य्यमन् पूषन् मघवा बहुलम् ६।४।१२८ मघवन् शब्दस्य वा तृ इत्यन्ता देशः ऋइत् उगिदचां सर्वनामस्थाने ऽधातोः ७।१।७० अ-धातो रुगितो नलोपि नो ऽञ्चतेश्च नुम्स्यात्सर्वनामस्था-ने उपधादीर्घः मघवान् मघवन्तौ मघवन्तः हे मघवन् मघ वद्भ्याम् तृत्वाभावेमघवा स्फटिराजवत् श्वयुवमघोनामत द्धिते ६।४।१३३ अन्नन्तानाम् भानामेषाम तद्धिते संप्र-सारणम् मघोनः मघवभ्याम् एवंश्वन्युवन् नसंप्रसारणे-संप्रसारणम् ६।१।३७ यूनः यूना युवभ्याम् इत्यादि अर्वा-हे अर्वन् अर्वणस्त्रसावनञः ६।४।१२७ न ञारहितस्या र्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशो नतुसौ अर्वन्तौ अर्वन्तः अ-र्वद्भ्यामित्यादि पथिमथ्यृभुक्षामात् ७।१।८५ सौ इतो ऽत्स र्वनामस्थाने ७।१।८६ पथ्यादेः थोन्थः ७।१।८७ पथिमथो स्थस्य न्थादेशः सर्वनामस्थाने पन्थाः पन्थानौ पन्थानः-भस्य टेर्लोपः ७।१।८८ भस्यपथ्यादेष्टिलोपः पथः पथा-पथिभ्याम् एवम्मथिन् ऋभुक्षिन् ष्णान्तापट् १।१।२४ षान्ता नान्ताच संख्याषट् संज्ञास्यात् पञ्चन् शब्दोनित्य म्बहुवचनान्तः पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः नुट् नोपधायाः ६।४।७ नान्तस्योपधायादीर्घो नामि पञ्चा नाम् पञ्चसु अष्टन आविभक्तौ ७।२।८४ हलादौवास्याद् अष्टाभ्य औश् ७।१।२१ कृताकारादष्टनो जश्शसोरौश् अ-

ष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वंज्ञा
पयति अष्टौ अष्टौ अष्टाभ्यः अष्टाभ्यः अष्टानाम् अष्टासु
आत्वाभावे अष्ट अष्ट इत्यादि पञ्चवत् ऋत्विक् दधृक् स्र-
गुद्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च ३।२।५९ एभ्यः क्विन् अ-
ञ्चेस्सुप्युपपदे युजिक्रुञ्चोः केवलयोः क्रुञ्चेर्नलोपाभाव
श्च निपात्यते कनावितौ कृदतिङ् ३।१।९३ अत्र धात्वधिका-
रे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् वेरपृक्तस्य ६।१।६७-
लोपः क्विन्प्रत्ययस्य कुः ८।२।६२ क्विन्प्रत्ययो यस्मात्तस्य
कवर्गोऽन्तादेशः पदान्ते इत्यस्यासिद्धत्वाच्चोः कुरिति कुत्व-
म् ऋत्विग् ऋत्विक् ऋत्विजौ ऋत्विग्भ्याम् युजेरसमासे-
७।१।७१ युजेस्सर्वनामस्थाने नुम् स्यादसमासे सुलोपः
संयोगान्तलोपः कुत्वेन नस्य ङः युङ् युञ्जौ युञ्जः युग्भ्या
म् चोः कुः ८।२।३० चवर्गस्य कवर्गः स्याज्झलि पदान्ते च-
सुयुक् सुयुजौ सुयुग्भ्याम् खन् खञ्जौ खन्भ्याम् व्रश्च-
भ्रस्ज सृज मृज यज राज भ्राजच्छशां षः ८।२।३६ झलि
पदान्ते च जश्त्व चर्त्वे राट् राड् राजौ राजः राड्भ्याम् एवं-
विभ्राट् देवेट् विश्वसृट् परौ व्रजेः षः पदान्ते परावुपपदे व्र-
जेः क्विप् दीर्घश्च पदान्ते षत्वमपि परिव्राट् परिव्राजौ विश्व
स्य वसुराटोः ६।३।१२८ दीर्घः विश्वाराट् विश्वाराड् विश्वरा-
जौ विश्वाराड्भ्याम् स्कोस्संयोगाद्योरन्ते च ८।२।२९ पदान्ते
झलि च यः संयोगस्तदाद्योः स्कोर्लोपः भृट् सस्य श्चुत्वेन शः
झलाञ्जश् झशि इति सस्य जः भृज्जौ भृड्भ्याम् त्यदाद्यत्व
म्पररूपत्वम् तदोः सः सावनन्त्ययोः ७।२।१०६ त्यदादीना
न्तदयोरनन्त्ययोस्सः स्यात्सौ स्यः त्यौ त्ये सः तौ ते यः यौ
ये एषः एतौ एते ङे प्रथमयोरम् ७।१।२८ युष्मदस्मद्भ्या
म् परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः त्वाहौ

सौ ७।२।९४ अनयोर्म्मपर्य्यन्तस्य त्वाहौ आदेशौस्तः शे
षे लोपः ७।२।९० एनयोष्टिलोपः त्वम् अहम् युवावौ द्वि
वचने ७।२।९२ द्वयोरुक्तावनयोर्म्मपर्य्यन्तस्य युवावौ-
स्तो विभक्तौ प्रथमायाश्च द्विवचने भाषायाम् ७।२।८८-
औङ्येनयोरात्वं लोके युवाम् आवाम् यूयवयौजसि ७
।२।९३ अनयोर्म्मपर्यन्तस्य यूयम् वयम् त्वमावेकवचने
७।२।९७ एकस्योक्तावनयोर्म्मपर्यन्तस्यत्वमौस्तः द्विती
याचाञ्च ७।२।८७ अनयोरात्स्यात् त्वाम् माम् शसोन-
७।१।२९ आभ्यांशसोनः स्यादमो ऽपवादः आदेः परस्य
संयोगान्तलोपः युष्मान् अस्मान् योऽचि ७।१।८९ अन
योर्यकारादेशः स्यादनादेशे ऽजादौ परतः त्वया मया युष्म
दस्मदोरनादेशे ७।२।८६ अनयोरात्स्यादनादेशे हला-
दौ युवाभ्याम् आवाभ्याम् युष्माभिः अस्माभिः तुभ्यमह्यौ
ङयि ७।२।९५ अनयोर्म्मपर्य्यन्तस्य टिलोपः तुभ्यम् म
ह्यम् भ्यसोभ्यम् ७।२।३० आभ्याम्परस्य युष्मभ्यम् अ-
स्मभ्यम् एकवचनस्यच ७।१।३५ आभ्यांङसेरत् त्वत्
मत् पञ्चम्या अत् ७।१।३१ आभ्याम्पञ्चम्याभ्यसो-
ऽत्स्यात् युष्मत् अस्मत् तवममौङसि ७।२।९६ अनयोर्म
पर्य्यन्तस्य युष्मदस्मभ्यांङसोऽश् ७।१।२७ तव मम यु
वयोः आवयोः साम आकम् ७।१।३३ आभ्याम् परस्य
साम आकम् युष्माकम् अस्माकम् त्वयि मयि युवयोः
आवयोः युष्मासु अस्मासु युष्मदस्मदो षष्ठीचतुर्थी
द्वितीयास्थयोर्वान्नावौ ८।१।२० पदात्परयोर पादादौ
स्थितयोः षष्ठ्यादिविशिष्टयोर्वान्नावौ इत्यादेशौस्तः ब-
हुवचनस्य वस्नसौ ८।१।२१ उक्त विधयोरनयोः षष्ठ्या-
दि बहुवचनांतयोः वस्नसौस्तो वान्नावोरपवादः तेम-

यावेकवचनस्य ८।१।२२ उक्तविधयोरनयोः षष्ठीचतुर्थ्येक वचनान्तयोस्तेमे एनौस्तः त्वामौ द्वितीयायाः ८।१।२३ द्विती येकवचनान्तयोस्त्वामाइत्यादेशौस्तः श्रीशस्त्वाऽवतुमापी ह दत्तात्तेमेऽपिशर्मसः॥ स्वामी तेमेऽपिसहरिः पातुवामपि नौविभुः सुखंवान्नौ ददात्वीशः पतिर्वामपि नौहरिः सोऽ व्याद्वोनःशिवंवोनोदद्यात्सेव्योऽत्रवः सनः एकवाक्ये यु- ष्मदस्मदादेशावक्तव्याः अन्वादेशेतुनित्यंस्युः धातातेभ- क्तोऽस्ति धातातवभक्तोऽस्ति तस्मैतेनमइत्येव सुपात् सुपा- दौ पादः पत् ६।४।१३० पाच्छब्दान्तं यदङ्गं भं तदवय- वस्य पाच्छब्दस्य पदादेशः सुपदः अग्निमत् अग्निमथौ ऋत्विगित्यादिना क्विन् अनिदितां हलउपधायाः क्ङिति ६।४।२४ हलन्तानामनिदितामङ्गानामुपधायानस्यलो पः क्ङिति उगित्वान्नुम् संयोगान्तस्यलोपः नस्यकुत्वे नङः प्राङ् प्राञ्चौ प्राञ्चः अचः ६।४।१२८ लुप्तनकार- स्याञ्चतेर्भस्याकारस्यलोपः चौ ६।३।१३८ लुप्ताकारन- काराञ्चतौपरे पूर्वस्याणोदीर्घः प्राचः प्राग्भ्याम् प्रत्यङ्- प्रत्यञ्चौ प्रतीचः प्रत्यग्भ्याम् उदङ् उदञ्चौ उदईत् ६।४। १३९ उच्छब्दात्परस्य लुप्तनकाराञ्चतेर्भस्याकारस्यईत् उदीचः उदग्भ्याम् समस्समि ६।३।९३ अप्रत्ययान्तेऽञ्च तौ सम्यङ् सम्यञ्चौ समीचः समग्भ्याम् सहस्यस- ध्रिः ६।३।९५ तथासध्र्यङ् तिरसस्तिर्यलोपे ६।३।९४ अ- लुप्ताकारेऽञ्चतौ अप्रत्ययान्तेतिरसस्तिर्यादेशः तिर्य- ङ् तिर्यञ्चौ तिरश्चः तिर्यग्भ्याम् नाञ्चेः पूजायाम् ६।४ ।३० पूजार्थस्याञ्चतेरुपधायानस्यलोपोन प्राङ् प्राञ्- चौ नलोपाभावादलोपोन प्राञ्चः प्राङ्भ्याम् प्राङ्क्षु एवंपूजार्थे प्रत्यङ्ङादयः क्रुङ् क्रुञ्चौ क्रुङ्भ्याम् पयोमु

क् पयोमुग् पयोमुचौ पयोमुग्भ्याम् उगिदचां सर्वनामस्थानेऽधातोः ... उगित्वान्नुम् सांतम-
हतः संयोगस्य ६।४।१० सान्तसंयोगस्य महतश्च यो न
कारस्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ
सर्वनामस्थाने महान् महान्तौ महान्तः हे महन् महद्भ्या
म् अत्वसन्तस्य चाऽधातोः ६।४।१४ अत्वन्तस्योपधाया
दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ धीमान् धीमन्तौ
धीमन्तः हे धीमन् शसादौ महद्वत् भातेर्डवतुः डित्वसा
मर्थ्यादभस्यापि टेर्लोपः भवान् भवन्तौ शत्रन्तस्य भवन्
उभे अभ्यस्तम् ६।१।५ षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते
उभे समुदिते अभ्यस्तसंज्ञे स्तः नाऽभ्यस्ताच्छतुः ७।१।७८
अभ्यस्ताच्छतुर्नुम् न ददत् ददतौ जक्षित्यादयः षट् ६।१।
६ षड् धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः
जक्षत् जक्षतौ जक्षतः एवं जाग्रत् दरिद्रत् शासत् चकास-
त् गुप् गुपौ गुपः गुब्भ्याम् त्यदादिषु दृशोऽनालोचने क-
ञ्च ३।२।६० त्यदादिषूपपदेषु अज्ञानार्थे दृशेः कञ् चा-
त्क्विन् आसर्वनाम्नः ६।३।९१ दृग् दृश् वतुषु तादृक् ता-
दृशौ तादृशः तादृग्भ्याम् व्रश्चेति षः जश् त्वचत्वे विड् विट्
विशौ विशः विड्भ्याम् नशेर्वा ८।२।६३ नशेः कवर्गोऽन्ता-
देशो वा पदान्ते नक् नट् नशौ नशः नग्भ्याम् नड्भ्याम् स्पृ-
शोऽनुदके क्विन् ३।२।५८ अनुदके सुप्युपपदे स्पृशेः क्विन्
घृतस्पृक् घृतस्पृशौ घृतस्पृशः दधृक् दधृषौ दधृग्भ्याम् र-
त्नमुट् रत्नमुषौ रत्नमुड्भ्याम् षट् षड्भिः षड्भ्यः षण्णा-
म् षट्सु रुत्वम् ससजुषो रुः रिति रुत्व-
म् र्वोरुपधाया दीर्घ इकः ८।२।७६ रेफवान्तयोरुपधाया इ-
को दीर्घः पदान्ते पिपठीः पिपठिषौ पिपठीर्भ्याम् नुम् विस-
र्जनीय शर्व्यवायेऽपि ८।३।५८ एतैः प्रत्येकं व्यवधानेऽ

पिइण् कुभ्याम्परस्य सस्य मूर्द्धन्यादेशः ष्टुत्वेनपूर्वस्यषःपि
पठीष्षु पिपठीःषु चिकीः चिकीर्षौ चिकीर्भ्याम् चिकीर्षुवि
द्वान् विद्वांसौ हेविद्वन् वसोस्संप्रसारणम् ६।४।१३१ वस्वन्
तस्यभस्य संप्रसारणंस्यात् विदुषः वस्रुस्त्वं स्विनिदः वि
द्वद्भ्याम् पुंसोऽसुङ् ७।१।८९ सर्वनामस्थाने विवक्षितेऽ
सुङ् स्यात् पुमान् हेपुमन् पुमांसौ पुंसः पुम्भ्याम् पुंसु
ऋदुशनेत्यनङ् उशना उशनसौ अस्य सम्बुद्धौ वानङ् न
लोपश्चवावाच्यः हेउशन हेउशनन् हेउशनः हेउशनसौ
उशनोभ्याम् उशनस्सु अनेहाः अनेहसौ हे अनेहः वेधाः
वेधसौ हे वेधः वेधोभ्याम् अदस औसु लोपश्च ७।२।१०७
अदस औत्स्यात्सोसुलोपश्च तदोरितिसः असौत्यदाद्य-
त्वम् पररूपत्वम् वृद्धिः अदसोऽसेर्दादुदोमः ८।२।८० अद
सोऽसान्तस्यदात्परस्यउदूतौ दस्यमश्च आन्तरतम्याद्धस्व
स्यउः दीर्घस्यऊः अमूजसश्शी गुणः एतईद्बहुवचने ८।२।८१
अदसोदात्परस्यैतईद्दस्यमोबह्वर्थोक्तौ अमी पूर्वत्रासि-
द्धमिति विभक्तिकार्यं प्राक्पश्चादुत्वमत्वे अमुम् अमू अमू
न् उत्वेकृतेघिसंज्ञायां नाभावः नमुने ८।२।३ नाभावे कर्त
व्ये कृतेच मुभावो नासिद्धः अमुना अमूभ्याम् अमीभिःअ-
मुष्मै अमीभ्यः अमुष्मात् अमुष्य अमुयोः अमीषाम् अमु
ष्मिन् अमीषु इति हलन्ताः पुल्लिङ्गाः नहोधः ८।२।३४ झ
लिपदान्तेच नहिवृतिवृषिव्यधिरुचिसहितनिषुक्वौ ६।३।
११६ क्विबन्तेषुपूर्वपदस्य दीर्घः उपानत् उपानहौ उपानत्सु
क्विन्नन्तत्वात्कुत्वेनघः उष्णिक् उष्णिहौ उष्णिग्भ्याम् द्यौः
दिवौ दिवः द्युभ्याम् गीः गिरौ गिरः एवंपूः चतस्रः चतसृ
णाम् का के काः सर्वावत् यस्सौ ८।२।३४ इदमोदस्ययःसौ
इयम् त्यदाद्यत्वम् पररूपत्वम् टाप् दश्चेतिमः इमे इमाः इ-

माम् अनया हलिलोपः आभ्याम् आभिः अस्यै अस्याः अनयोः आसाम् अस्याम् आसु त्यदाद्यत्वम् टाप् स्या त्ये स्याः एवं तद् यद् एतद् वाक् वाचौ वाग्भ्याम् वाक्षु अप् शब्दो नित्यम्बहुवचनान्तः अप्तृन्निति दीर्घः आपः अपो भि ७।४।४८ अपस्तकारोभादौ प्रत्यये अद्भिः अद्भ्यः अपाम् अप्सु दिश् दिक् दिशः दिग्भ्याम् त्यदादिष्विति दृशेः क्विन् विधानादन्यत्रापि कुत्वम् दृक् दृग् दृशौ दृग्भ्याम् त्विट् त्विषौ त्विड्भ्याम् ससजुषोरिति रुत्वम् सजूः सजुषौ सजूर्भ्याम् आशीः आशिषौ आशीर्भ्याम् असौ उत्वम त्वे अमू अमूः अमुया अमूभ्याम् अमूभिः अमुष्यै अमूभ्यः अमुष्याः अमुयोः अमूषाम् अमुष्याम् अमूषु इति हलन्ताः स्त्रीलिङ्गाः स्वमोर्लुक् दत्वम् स्वनडुत् स्वनडुही चतुरनडुहोरित्याम् स्वनड्वांहि पुनस्तद्वत् शेषम्पुंवत् वाः वारी वारि वारा वार्भ्याम् चत्वारि किम् के कानि इदम् इमे इमानि अन्वादेशे नपुंसके एनद्वक्तव्यः एनत् एने एनानि एनेन एनयोः अहः विभाषाङिश्योः अह्नी अहनी अहानि अहन् ८।२।६८ अहन्नित्यस्य रुः पदान्ते अहोभ्याम् दण्डि दण्डिनी दण्डीनि दण्डिना दण्डिभ्याम् सुपथि टिलोपः सुपथी सुपन्थानि ऊर्क् ऊर्ज्जी ऊर्न्ज्जि नरजानांसंयोगः तत् ते तानि यत् ये यानि एतत् एते एतानि गवाक् गोची गवाञ्चि पुनस्तद्वत् गोचा गवाग्भ्याम् शकृत् शकृती शकृन्ति ददत् वा नपुंसकस्य ७।१।७९ अभ्यस्तात्परोयः शता तदन्तस्य क्लीबस्य वा नुम् - सर्वनामस्थाने ददन्ति ददति तुदत् आच्छीनद्योर्नुम् ७।१।८० अवर्णान्तात्परोयः शतुरवयवस्तदन्तस्य नुम् - वाशीनद्योः तुदन्ती तुदती तुदन्ति पचत् शप्श्यनोर्नित्यं

शपृश्यनोशत्परोयशतुरवयवस्तदतस्य नित्यं नुम् शी-
नद्योः पचन्तौ पचन्ति दीव्यत् दीव्यन्तौ दीव्यन्ति धनुः
धनुषी सान्तेति दीर्घः नुम् विसर्ज्जनीयेतिषः धनूंषि धनु-
षा धनुर्भ्याम् एवं चक्षुर्हविरादयः पयः पयसी-
पयांसि पयसा पयोभ्याम् सुपुम् सुपुंसी सुपुमांसि
अदः विभक्तिकार्य्यम् उत्वमत्वे अमू अमूनि शेषम्पुंव-
त् इति हलन्तनपुंसकलिङ्गाः स्वरादिनिपातमव्ययम्
१।१।३७ स्वर् अन्तर् प्रातर् पुनर् सनुतर् उच्चैस् नीचै-
स् शनैस् ऋधक् ऋते युगपत् आरात् पृथक् ह्यस् श्वस्
दिवा रात्रौ सायम् चिरम् मनाक् ईषत् जोषम् तूष्णीम्
बहिस् अवस् समया निकषा स्वयम् वृथा नक्तम् नञ् हेतौ
इद्धा अद्धा सामिवत् ब्राह्मणवत् क्षत्रियवत् सना उपधा स
नत् सनात् अन्तरा अन्तरेण ज्योक् कम् सहसा विना ना-
ना स्वस्ति स्वधा अलम् वषट् श्रौषट् वौषट् अन्यत् अस्ति
उपांशु क्षमा विहायसा दोषा मृषा मिथ्या मुधा पुरा मिथो
मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्य्यहलम्
अभीक्ष्णम् साकं सार्द्धम् नमस् हिरुक् धिक् अथ अम्-
आम् प्रताम् प्रशाम् प्रशान् मा माङ् आकृतिगणोऽयम्
च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् कूप-
त् सूपत् कुवित् नेत् चेत् चण् यत्र कच्चित् नह हन्त माकि-
म् माकीम् नकिः अकीम् माङ् नञ् यावत् तावत् त्वैन्वै
द्वै रै श्रौषट् वौषट् स्वाहा स्वधा वषट् तुम् तथा हि खलु
किल अथ सुष्ठु आदह उपसर्गविभक्तिस्वरप्रतिरूपका-
श्च अवदत्तम् अहंयुः अस्तिक्षीरा अ आ इ ई उ ऊ ए ऐ
ओ औ पशु शुकम् यथा कथाच पाट् प्याट् अङ् हे है
भोः अयेघविषु एकपदे युत् आतः चादिरप्याकृतिगणः

तसिलादयः प्राक् पाशपः शस् प्रभृतयः प्राक् समासान्ते-भ्यः अम् आम् कृत्वोर्थाः तसिवती नानाञौ एतदन्तम-प्यव्ययम् अतइत्यादि कृन्मेजन्तः १।१।३९ कृद्योमान्त एजन्तश्च तदन्तमव्ययंस्यात् स्मारम् स्मारम् जीवसे पिबध्यै क्त्वातोसुन्कसुनः १।१।४० एतदन्तमव्ययम् कृत्वाउदेतोः विसृपः अव्ययीभावश्च १।१।४१ अधिहरि अव्ययादाप्-सुपः २।४।८२ अव्ययादापः सुपश्चलुक् तत्रशालायाम्-सदृशन्त्रिषुलिङ्गेषु सर्वासुच विभक्तिषु वचनेषुचसर्वेषु यन्नव्येतितदव्ययम् वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः आपञ्चैवहलान्तानांयथावाचानिशादिशा अवगाहः वगाहः अपिधानम् पिधानम् इत्यव्ययानि लट् लिट्-लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् एषुपञ्चमो ल-कारः छन्दोमात्रगोचरः लः कर्मणिच भावेचाकर्मकेभ्यः ३।४।६९ लकारास्सकर्मकेभ्यः कर्मणि कर्तरिच स्युर कर्मकेभ्योभावे कर्तरिच वर्तमानेलट् ३।२।१२३ वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् अटाविती उच्चारणसामर्थ्याल्लु-स्यनेत्वम् भूसत्तायाम् कर्तृ विवक्षायां भूलइति स्थिते-लस्येत्यधिकृत्य तिप्तस्झि सिप्थस्थ मिप्वस्मस् ताताञ्झथासाथान्ध्वमिड्वहिमहिङ् ३।४।७८ एतेऽष्टादश लादेशाः स्युः लः परस्मैपदम् १।४।९९ लादेशाः परस्मैपद संज्ञाः स्युः तङानावात्मनेपदम् १।४।१०० तङ् प्रत्याहारः शानच् कानचौ चैतत्संज्ञाः स्युः पूर्वसंज्ञाऽपवादः अनुदात्तङित आत्मनेपदम् १।३।१२ अनुदात्तेतोङितश्चधातोरात्मनेपदंस्यात् कर्तृगामिनि क्रियाफले शेषात्कर्तरिपरस्मैपदम् १।३।७८ आत्मनेपदनिमित्तहीनाद्धातोः कर्तरिपरस्मैपदंस्यात् स्वरितञितः कर्त्रभिप्राये क्रियाफले-

१।३।७२ स्वरितेतोञितश्च धातोरात्मनेपदंस्यात्कर्तृगामि
निक्रियाफले तिङस्त्रीणित्रीणिप्रथममध्यमोत्तमाः १।४।
१०१ तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः-
स्युः तान्येकवचनद्विवचनबहुवचनान्येकशः १।४।१०२ ल
ब्धप्रथमादिसंज्ञानितिङस्त्रीणिप्रत्येकमेकवचनादिसं-
ज्ञानिस्युः युष्मद्युपपदे समानाधिकरणे स्थानिन्यपिमध्य
मः १।४।१०५ तिङ्वाच्यकारकवाचिनि युष्मद्यप्रयुज्यमा-
नेप्रयुज्यमानेच मध्यमः अस्मद्युत्तमः १।४।१०७ तथाभू
तेऽस्मद्युत्तमः शेषे प्रथमः १।४।१०८ मध्यमोत्तमोरविष-
येप्रथमः भूति इतिस्थिते तिङ्शित्सार्वधातुकम् ३।४।
११३ तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः कर्त्तरि
शप् ३।१।६८ कर्त्रर्थेसार्वधातुके परे धातोः शप् सार्वधातु
कार्द्धधातुकयोः ७।३।८३ अनयोःपरयोरिगन्ताङ्गस्यगु-
णः अवादेशः भवति भवतः झोन्तः ७।१।३ प्रत्ययावयव
स्यझस्यान्तादेशः अतोगुणे भवन्तिभवसि भवथः भवथ
अतोदीर्घोयञि ७।३।१०१ अतोङ्गस्यदीर्घोयञादौसार्वधा
तुके भवामि भवावः भवामः सभवति तौभवतः तेभवन्तित्वं
भवसियुवाम् भवथःयूयं भवथ अहंभवामि आवाम् भवावः
वयम् भवामः परोक्षे लिट् ३।२।११५ भूतानद्यतनपरोक्षा
र्थवृत्तेर्धातोर्लिट्स्यात् लस्यतिबादयः परस्मै पदानां
णलतुसुस्थलथुसणल्वमाः ३।४।८२ लिटस्तिबादीनां
णलादयःस्युः भूअइतिस्थिते भुवोवुग्लुङ्लिटोः ६।४
।८८ भुवोवुगागमः स्याल्लुङ्लिटोरचि लिटिधातोरनभ्या
सस्य ६।१।८ लिटिपरे अनभ्यासधात्ववयवस्यैकाचो प्र-
थमस्य द्वेस्त आदिभूतादचः परस्यतु द्वितीयस्य भूव् भू-
व् अइतिस्थिते पूर्वोऽभ्यासः ६।१।४ अत्रयेद्वे तयोःपूर्वोऽ

भ्याससंज्ञः हलादिःशेषः ७।४।६० अभ्यासस्यादिर्हल्-
शिष्यते अन्येहलोलुप्यन्तेन्ह्रस्वः ७।४।५९ अभ्यासस्या
चोन्ह्रस्वः स्यात् भवतेरः ७।४।७३ भवतेरभ्यासस्योकार-
स्य अः स्याल्लिटि अभ्यासेचर्च ८।४।५९ अभ्यासेझलां
चरः स्युर्जशश्च झलांजशः स्वथांचर इति विवेकः बभूव ब-
भूवतुः बभूवुः लिट्च ३।४।११४ लिडादेशस्तिङार्द्ध धातुक-
संज्ञः आर्द्ध धातुकस्येड् वलादेः ७।२।३५ बभूविथ बभूवथुः
बभूव बभूव बभूविव बभूविम अनद्यतनेलुट् ३।३।१५
भविष्यत्यनद्यतने ऽर्थे धातोर्लुट् स्यतासी लृलुटोः ३।१।
३३ धातोरेतौ स्तो लृलुटोः परतः शबाद्यपवादः लृइतिलृङ्-
लृटोर्ग्रहणम् आर्द्धधातुकं शेषः ३।४।११४ तिङ्शिभ्द्यो ऽ
न्ये धातो रिति विहित प्रत्ययाएत संज्ञाः स्युः इट् लुटः प्र-
मस्यडारौरसः २।४।८५ डित्वसामर्थ्यादभस्यापिटे र्लोपः
भविता तासस्त्योर्लोपः ७।४।५० तासेरस्तेश्च लोपः स्यात्
सादौप्रत्ययेरिच ७।४।५१ रादौप्रत्ययेतथा भवितारौ भ-
वितारः भवितासि भवितास्थः भवितास्थ भवितास्मि भवि
तास्वः भवितास्मः लृट् शेषेच ३।३।१३ भविष्यदर्थाद्धातो
र्लृट् क्रियार्थायां क्रियायां सत्याम सत्यां वा इट् भविष्य
ति भविष्यतः भविष्यन्ति भविष्यसि भविष्यथः भविष्य
थ भविष्यामि भविष्यावः भविष्यामः लोट्च ३।३।१६२ वि
ध्याद्यर्थेषुधातोर्लोट् आशिषि लिङ्लोटौ ३।३।१७३ ए
रुः ३।४।८६ लोट इकारस्यउः भवतु तुह्योस्तातङाशि
ष्यन्यतरस्याम् ७।१।३५ आशिषि तुह्योस्तातङ्वा पर-
त्वात्सर्वादेशः भवतात् लोटोलङ्वत् ३।४।८५ लोटस्ता
मादयस्सलोपश्च तस्थस्थमिपान्तान्तन्तामः ३।४।१०५
ङितश्चतुर्णान्तामादयः भवताम् भवंतु सेर्ह्यपिच्च ३।४।८७

लोटः सेर्हिः सोऽपिच्च अतो हेः ६।४।१०५ अतः परस्य हेर्लुक् भ-
व भवतात् भवतम् भवत मेर्निः ३।४।८९ लोटः आडुत्तमस्य
पिच्च ३।४।९२ लोडुत्तमस्याट् पिच्च हिन्योरुत्वन्नइत्युच्चारण
सामर्थ्यात् भवानि ते प्राग्धातोः १।४।८० तेगत्युपसर्गसं-
ज्ञा धातोः प्रागेव प्रयोक्तव्याः आनि लोट् ८।४।१६ उपसर्ग-
स्थान्निमित्तात्परस्य लोडादेशस्यानीति नस्य णः स्यात् प्रभ-
वाणि दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः दुःस्थि-
तिः दुर्भवानि अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वा-
च्यम् अन्तर्भवाणि नित्यं ङितः ३।४।९९ सकारान्तस्य ङिदु-
त्तमस्य नित्यं लोपः अलोऽन्त्यस्येति सलोपः भवाव भवाम
अनद्यतने लङ् ३।२।१११ अनद्यतनभूतार्थवृत्तेर्धातोर्लङ्
लुङ् लङ् लृङ् क्ष्वडुदात्तः ६।४।७१ एष्वङ्गस्याट् इतश्च
३।४।१०० ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः अ-
भवत् अभवताम् अभवन् अभवः अभवतम् अभवत अ-
भवम् अभवाव अभवाम विधिनिमन्त्रणामन्त्रणाधीष्टसंप्र-
श्नप्रार्थनेषु लिङ् ३।३।१६१ एष्वर्थेषु धातोर्लिङ् यासुट्प-
रस्मैपदेषूदात्तो ङिच्च ३।४।१०३ लिङः परस्मैपदानां यासु-
डागमो ङिच्च लिङ्सलोपोऽनन्त्यस्य ७।२।७९ सार्वधा-
तुकलिङोऽनन्त्यस्य सस्य लोपः इति प्राप्ते अतो येयः ७।२।८०
अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् गुणः लो-
पो व्योर्वलि ६।१।६६ भवेत् भवेताम् झेर्जुस् ३।४।१०८ लि-
ङः भवेयुः भवेः भवेतम् भवेत भवेयम् भवेव भवेम लिङा-
शिषि ३।४।११६ आशिषि लिङ् तिङार्द्धधातुकसंज्ञः स्या-
त् किदाशिषि ३।४।१०४ आशिषि लिङो यासुट् कित् स्कोः
संयोगाद्योरिति सलोपः क्ङिति च १।१।५ गित्किन्ङिन्निमि-
त्ते इग्लक्षणे गुणवृद्धी न स्तः भूयात् भूयास्ताम् भूयासुः

भूयाः भूयास्तम् भूयास्त भूयासम् भूयास्व भूयास्म लुङ्
३।२।११० भूतार्थे धातोर्लुङ् स्यात् माङि लुङ् ३।३।१७५
सर्वलकारापवादः स्मोत्तरे लङ् च स्मोत्तरे माङि लङ् स्यात्
चाल्लुङ् च्लि लुङि ३।१।४३ शबाद्यपवादः च्लेः सिच् ३।१।४४
इच्चावितौ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।
७७ लुक् गापाविहेणादेशा पिबती गृह्येते भूसुवोस्तिङि ७।
३।८८ भूसूएतयोस्सार्वधातुके तिङि गुणो न अभूत् अ-
भूताम् अभूवन् अभूः अभूतम् अभूत अभूवम् अभूव
अभूम नमाङ्योगे ६।४।७४ अडाटौ न स्तः माभवान् भूत्
मास्म भवत् मास्म भूत् लिङ् निमित्ते लृङ् क्रियातिपत्तौ ३
।३।१३९ हेतुहेतुमद्भावादि लिङ् निमित्तन्तत्र भविष्यत्य-
र्थे लृङ् क्रियाया अनिष्पत्तौ गम्यायाम् अभविष्यत् अभ
विष्यताम् अभविष्यन् अभविष्यः अभविष्यतम् अभवि
ष्यत अभविष्यम् अभविष्याव अभविष्याम सुवृष्टिश्चेद
भविष्यत् तदा सुभिक्षमभविष्यत् इत्यादि ज्ञेयम् अत सा-
तत्यगमने २ अतति अत आदेः ७।४।७० अभ्यासस्यादेर-
तो दीर्घः स्यात् आत आततुः आतुः आतिथ आतथुः आत
आतिव आतिम आतिता आतिष्यति आततु आडजादी
नाम् ६।४।७२ अजादेराट् स्यात् लुङ् लङ् लृङ्क्षु आतत्
अतेत् अत्यात् अत्यास्ताम् लुङि सिचि इडागमे कृते अस्ति
सिचोऽपृक्ते ७।३।९६ विद्यमानात् सिचोऽस्तेश्च परस्या
पृक्तस्य हल ईडागमः इट ईटि ८।२।२८ इटः परस्य सस्य
लोपः स्यादीटि सिज्लोप एकादेशे सिद्धो वाच्यः आती-
त् आतिष्टाम् सिजभ्यस्तविदिभ्यश्च ३।४।१०९ सिचोऽ
भ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् आतिषुः आ-
तीः आतिष्टम् आतिष्ट आतिषम् आतिष्व आतिष्म आति

ष्यत् षिधु गत्याम् ३ ह्रस्वम् लघु १।४।१० संयोगे गुरु १।४।११
संयोगपरे ह्रस्वङ्गुरु दीर्घञ्च ७।४।७१ गुरुः स्यात् पुगन्तल-
घूपधस्य च ७।३।८६ पुगन्तस्य लघूपधस्य चाङ्गस्येको गु-
णः सार्वधातुकार्द्धधातुकयोः धात्वादेरिति सः सेधति षत्व-
म् सिषेध असंयोगाल्लिट् कित् १।२।५ असंयोगात्परो ऽपि-
ल्लिट् कित्स्यात् सिषिधतुः सिषेधिथ सिषिधथुः सिषिध
सिषेध सिषिधिव सिषिधिम सेधिता सेधिष्यति सेधतु अ-
सेधत् सेधेत् सिध्यात् असेधिष्यत् एवं चिती संज्ञाने ४ शुच-
शोके ५ गद व्यक्तायां वाचि ६ गदति नेर्गद नद पतपद घुमास्य
ति हन्तियाति वाति द्रातिप्साति वपति वहति शाम्यति चिनो-
ति देग्धिषु च ८।४।१७ उपसर्गस्थान्निमित्तात्परस्य नेर्णः ग-
दादिषु परेषु प्रणिगदति कुहोश्चुः ७।४।६२ अभ्यासकवर्ग-
हकारयोश्चवर्गादेशः अत उपधायाः ७।२।११६ वृद्धिः स्यात्
ञिति णिति च प्रत्यये जगाद जगदतुः जगदुः जगदिथ जगद
थुः जगद णलुत्तमो वा ७।१।९१ णिद्वा स्यात् जगाद जगद जग
दिव जगदिम गदिता गदिष्यति गदतु अगदत् गदेत् गद्यात्
अतो हलादेर्लघोः ७।२।७ हलादेर्लघोरतो वृद्धिर्वेडादौ परस्मैप
दे सिचि अगादीत् अगदीत् अगदिष्यत् णद अव्यक्ते शब्दे
७ णो नः ६।१।६५ धात्वादेर्णस्य नः णोपदेशास्त्वनर्द्नाटिना
थ्नाध्नन्द्नक्कनॄनृतः उपसर्गादसमासेपि णोपदेशस्य ८।
४।१४ उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य
णः समासे असमासेपि प्रणदति प्रणिनदति नदति ननाद अ-
त एकहल्मध्येनादेशादेर्लिटि ६।४।१२० लिण्निमित्तादेशादि
कं न भवति यदङ्गन्तदवयवस्यासंयुक्तहल्मध्यस्थस्यातएत्व
मभ्यासलोपश्च किति लिटि थलि च सेटि ६।४।१२१ प्रागुक्तं स्या
त् नेदिथ नेदथुः नेद ननाद ननद नेदिव नेदिम नदिता नदिष्य

